श्रीत्रिदण्डिदेवग्रन्थमालायाः विंशतिप्रसूनम्

श्रियै नमः ।

श्रीमतेरामानुजाय नमः । श्रीवादिभीकरमहागुरवे नमः

## ऋग्वेदोक्तं शुद्धं

# ।। श्रीसूक्तम् ।।

श्री १००८ श्रीमद्वेदमार्गप्रतिष्ठापनाचार्योभयवेदान्तप्रवर्तकाचार्य

श्रीमत्परमहंसपरिव्राजकाचार्य सत्सम्प्रदायाचार्य

जगद्गुरुभगवदनन्तपादीय

**श्रीमद्विष्वक्सेनाचार्य श्रीत्रिदण्डिस्वामिविरचितया**

'मर्मबोधिनी' नाम्न्या भाषाटीकयासहितम्

तच्च

**श्रीपादसेवकश्रीसुदर्शनाचार्यब्रह्मचारिणः**

रोहतासमण्डलान्तर्गत डेहरी श्रीविजयराघवमन्दिराध्यक्षस्य

सत्प्रेरणया नबीनगर (औरंगाबाद) महालक्ष्मीयज्ञसमित्या प्रकाशितम्


सम्पादक :

**डॉ० सुदामा सिंह**

एम० ए०, पी० एच० डी०, प्रोफेसर एवं अध्यक्ष

श्रम एवं समाज कल्याण विभाग, म० वि० वि०, बोधगया।



चतुर्थ संस्करण–१०००]  पौषपूर्णिमा–२०५१  [मूल्य १५/-

श्रीत्रिदण्डिदेवग्रन्थमालायाः विंशतिप्रसूनम्

श्रियै नमः ।

श्रीमतेरामानुजाय नमः । श्रीवादिभीकरमहागुरवे नमः ।

ऋग्वेदोक्तं शुद्धं

# ।। श्रीसूक्तम् ।।

श्री १००८ श्रीमद्वेदमार्गप्रतिष्ठापनाचार्योभयवेदान्तप्रवर्तकाचार्य

श्रीमत्परमहंसपरिव्राजकाचार्य सत्सम्प्रदायाचार्य

जगद्गुरुभगवदनन्तपादीय

श्रीमद्विष्वक्सेनाचार्य श्रीत्रिदण्डिस्वामिविरचितया

'मर्मबोधिनी' नाम्न्या भाषाटीकयासहितम्

तच्च

श्रीपादसेवकश्रीसुदर्शनाचार्यब्रह्मचारिणः

रोहतासमण्डलान्तर्गत डेहरी श्रीविजयराघवमन्दिराध्यक्षस्य


सत्प्रेरणया नवीनगर (औरंगाबाद) महालक्ष्मीयज्ञसमित्या प्रकाशितम्



सम्पादक :

डॉ० सुदामा सिंह

एम० ए०, पी० एच० डी०, प्रोफेसर एवं अध्यक्ष

श्रम एवं समाज कल्याण विभाग, म० वि० वि०, बोधगया ।



चतुर्थ संस्करण—१०००] पौषपूर्णिमा—२०५१ [मूल्य १५/-

अनन्तश्रीविभूषित श्रोत्रियब्रह्मनिष्ठ श्रीमद्विष्वक्सेनाचार्य

श्रीत्रिदण्डीस्वामीजी महाराज

॥ श्रियै नमः ॥

श्रीमते रामानुजाय नमः । श्रीवादिभीकरमहागुरवे नमः ॥

# * नम्र-निवेदन *

जिनके ज्ञान में गंगा की पवित्रता हो ! तत्त्व-बोध में महासिंधु की गम्भीरता ! उपदेशामृत में शुक-गिरा की मिठास हो, अर्थानुसंधान में कृष्णद्वैपायन की सतर्कता ! वैसे विद्वद्वर्गशिरोमणि अनन्तश्रीसमलङ्कृत पूज्यपाद श्रीस्वामीजी प्रणीत 'श्रीसूक्त' की 'मर्मबोधिनी' व्याख्या के चतुर्थ संस्करण को महाभागवतों के सम्मुख प्रस्तुत करते हुए अपार हर्ष हो रहा है। तुलसी-दल से पावन इस ग्रन्थ-रत्न के सन्दर्भ में एक सहज मनोरथ दिल में जग उठता है—

**श्रीसूक्तचर्चामियं तु मर्मबोधिनी मनोहरा ।**
**व्याख्या वै योगिराजेन भूयाद्भुवनमोहिनी ॥**

ग्रन्थ का फलद पक्ष महार्घ है क्योंकि इसमें श्रीसूक्त की ऋचाओं की मार्मिक व्याख्याओं के साथ ही साथ, महालक्ष्मी-पूजा-विधि, 'सचित्रश्रीचक्रम्' सीतोपनिषद् एवं सौभाग्यलक्ष्म्युपनिषद् का भी वर्णन है। सौभाग्य का ही संयोग है कि करीब तीन दशक पूर्व सम्वत् २०२० में इस ग्रन्थ के द्वितीय संस्करण का प्रकाशन श्रीमहालक्ष्मी-यज्ञ-समिति नबीनगर द्वारा कराया गया था और

आज इस चतुर्थ संस्करण का प्रकाशन भी श्रीमहालक्ष्मी-यज्ञ-समिति नबीनगर द्वारा ही कराया गया है। इसलिए श्रीमहालक्ष्मी यज्ञ समिति, नबीनगर (जि०-औरंगाबाद) के प्रति हार्दिक आभार व्यक्त करता हूँ। सत्प्रेरणा के लिए श्रीपादसेवक श्रीसुदर्शनाचार्य ब्रह्मचारीजी, अध्यक्ष श्रीविजयराघव मन्दिर, डेहरी के पाद-पद्मों में सदावनत हूँ। विलम्ब और त्रुटियों के लिए क्षमा प्रार्थी हूँ। अन्ततः श्रीमदाचार्य प्रभु की शत-शत सरोजश्री-अपहर्त्री पद-धूलि ही इस भाग्यहीन के भाग्य-पलट का कुंकुम बनी रहे, म्रियमाण जीवन की संजीवनी बनी रहे, यही श्रीचरणों में गिरे दास का आर्त्त निवेदन है।

श्रीचरणाश्रित

**सुदामा सिंह**

श्रीपादसेवक

**श्री सुदर्शनाचार्य ब्रह्मचारी जी**

अध्यक्ष--श्रीविजयराघव मंदिर, डेहरी-ऑन-सोन

श्रियै नमः। श्रीधराय नमः।

## ॥ अथ अभिनन्दनपत्राणि ॥

श्रीमद्वेदमार्गप्रतिष्ठापनाचार्योभयवेदान्त-राद्धान्त-निर्धारण-सार्वभौम-श्रीमच्छठरिपु-परकाल-नाथ-यामुन-यतिवर-वरवरमुनीन्द्रादिप्रणीतसुदिव्य - निबन्धन - निबद्ध मानस-जनन-मरण-संसरण-महापथबम्भ्रम्यमाणजनिमत्कदम्ब-विमुक्ति-घन्टापथोपदेशदेशिक-शम दम-दया-दाक्षिण्यसौशील्यवात्सल्यादिगुणगणविभूषितानन्तश्रीसमलंकृतश्रीमज्जगद्गुरु-भगवदनन्तपादीयानामीशादिदशोपनिषद्व्याख्यातृवर्य्याणांयोगचरमसोपानरुपसमाधिसमधिष्ठित-ब्रह्मसाक्षात्कृतवर्य्याणामष्टोत्तरसहस्र श्रीसमलंकृतानांश्रीमद्विष्वक्सेनाचार्य्यश्रीत्रिदण्डीस्वामिनां करकमलयोः औरंगाबादमण्डलान्तर्गतनवीनगरे श्रीमहालक्ष्मीयज्ञावसरे सादरसमर्पितानि अभिनन्दन-पत्राणिः-

॥ १ ॥

लोकाचार्यपथानुगामिमहतां श्रेष्ठो यतीन्द्रः प्रभुः ।
तद्राद्धान्त-सुरक्षणं प्रकुरुते वाचा हृदा कर्मणा ॥
तस्माल्लोकपुरस्त्वमेति बहुधा सर्वस्य कल्याणकृत् ।
विष्वक्सेनमुनिः सदैव दयतां श्रीराजनारायणे ॥१॥

चातुर्वर्ग्यफलं सुदुर्लभमिदं यद्दर्शनेनैव वै ।
सौलभ्यं कुरुते सदैवजनता सः स्वामिराजो महान् ॥
शान्तोदान्ततरोऽधुना विजयते सन्मध्यलोकेश्वरः ।
विष्वक्सेनयतिः सदैव दयतां दासानुदासे मयि ॥२॥

जयतु जयतु देवो योगिराजोऽमलात्मा ।
प्रसरतु तव कीर्त्ति- वल्लिका विश्वभाण्डे ॥
सफलयतु मदीयां प्रार्थनां ईष्टदेवः ।
भवतु सुकरुणा ते प्रार्थिनि मयि सदैव ॥३॥

श्रीचरणाब्जचञ्चरीकः
जगद्गुरु रामानुजाचार्यपदभाक्
स्वामी राजनारायणाचार्यः
संस्थापकाध्यक्षः
श्रीत्रिदण्डिदेवलोकसेवासंस्थान
देवरिया, उ० प्र०

॥ २ ॥

श्रीमत्कीर्त्यैर्यशोभिः प्रथिततरदिशा देवपूजाङ्गतस्य ।
श्रीभाष्याख्यानलीलाललितकृतिकुलाप्राप्तसिद्धिर्गुरौ च ॥
देशे देशे सभायां बिविधवुधजनैः स्तूयमानस्य नित्यम् ।
श्रीविष्वक्सेनसूरेश्चरणसरसिजं नौमि दासस्तवाहम् ॥१॥

पौनः पुण्यास्रवन्ती सुपुनपुनतटे ते कुटी काशमाना ।
ग्रामे ग्रामे जनानां वचसि जनमुखात् गीयमाना च कीर्त्तिः ॥
तस्य श्री पूर्णश्चाम्नो विदितयतिवरस्यास्य विज्ञानराशेः ।
श्रीविष्वक्सेनसूरेश्चरणसरसिजं नौमि चोमेशदासः ॥२॥

लोकानामुपकारकं यतिगुरुं वेदान्तविज्ञं प्रभुम् ।
ह्यार्तत्राणपरायणं द्विजवरं योगीश्वरं मुक्तिदम् ॥
भालेसंस्थितशोभनप्रियतरश्वेतोर्ध्वपुण्ड्रं शुचिम् ।
विष्वक्सेनपदाभिधं सुललितं ज्ञानाय वन्दे सदा ॥३॥

त्रिदण्डहस्ताय शुचिव्रताय ।
महात्मने वेदविदेनराय ॥
सुखस्य दात्रे परतापहन्त्रे ।
नमोस्तु नित्यं नरपूजिताय ॥४॥

पादारविन्दयोस्तस्य रतिर्मम यथा भवेत् ।
अतोऽहंस्तौमि शान्त्यर्थं त्रिदण्डिस्वामिनं गुरुम् ॥५॥

योगीन्द्राय सुधीराय ब्रह्मदर्शनकारिणे ।
नमस्करोम्यहं नित्यं चोमेशनरपामरः ॥६॥

नवीनगर यज्ञेऽत्र सतां सेवासुसादरम् ।
समर्पयाम्यहं तस्य करे पत्रं सुगुम्फितम् ॥७॥

श्रीमतां चरणाब्जरेणुरूषितः—
पं० उपेन्द्राचार्यः
( उमेशप्रसादउपाध्यायः )
कर्मकाण्डरत्नः, साहित्याचार्यः
संस्कृताध्यापकः उच्च विद्यालय
वरिसवन, भोजपुर ।

●

॥ ३ ॥

दक्षे हस्ते त्रिदण्डो विलसति सततं दारुपात्रं च वामे,
पौनःपुण्यस्य तीरे निवसति फलके पण्डितानाञ्च मध्ये ।
राजन्तं ज्ञानवन्तं सकलगुणनिधिं भूसुरैः सेव्यमानम्,
दिव्याकारं नताः स्मो यतिपदकमलं तं सुरेशं समन्तात् ॥१॥

औरङ्गाबादखण्डेऽमितजनलसिते नाविनागारिनाम्ना,
प्रान्ते पूर्वोत्तरेऽस्मिन्सुजनकनगरे धर्ममित्रस्य तीर्थे ।
पौनः पुण्यस्य तीरे सुशरदलकीर्णा प्रकुटीरा विचित्रा,
सेव्यं सेवाञ्च धत्ते सततमखमुनिं साधुवादैश्च सार्धम् ॥२॥

मन्ये चैते सुवृक्षाः कुसुमदलफलाः पंक्तिबद्धाः सुराश्च,
स्वं स्वं रूपं पुराणं सुरगणगमकं व्यञ्जयन्तीह पार्श्वे ।
तत्रैकः पादप श्रीफलदलसहितां मङ्गलां साधयन्सन्,
सेनेशं सेवयन् सो यतिवरसविधं राजते दक्षिणे वै ॥३॥

ह्येको वृक्षस्तवाग्रे हरिमिव भजते चात्मनाथं हिमत्वा,
नैकै र्मधिव्यवृक्षैः सह फलललितो चात्र राराजते वै ।
गुल्माकुञ्जालताभिः शुभमिव दधति श्रीवहाः शान्तिदाश्च,
दिव्ये चैवं स्थलेते बुधजनसविधं स्वागतं हे मुने वै ॥४॥

सभ्यैः दत्तं च पत्रं रचितलसितकाव्यं काञ्चनेनापि शुभ्रं,
सिद्धयन्तीह श्रियस्तेजनजनवदने श्रूयते सा च कीर्त्तिः ।
दासोऽहन्ते गुरो ! मे सततनतिमुदा पादपद्मं भजामि,
पुत्रस्यार्तिप्रपीडां हरतु यतिवर ! प्रार्थनाञ्चापिमत्वा ॥५॥

शास्त्रार्थस्य प्रथमदिवसे शब्दशास्त्रे विचारे,
वृद्धै र्वंशीधरबुधवरैः साधितः पूर्वपक्षः ।
मानैर्युक्तया मदनविबुधैः खण्डितः साधुवादैः,
साहित्ये चात्र सदसि शुभे श्रीनिवासैः सुविज्ञैः ॥६॥

सम्यक्तर्कैः प्रविहितसमाधानपूर्णैः विचित्रैः,
न्याये नीलोघट इतिकथावादवादे विवादे ।
वेदान्ते श्रीरसितलसिते सिद्धरामानुजीयो,
मन्तव्यो वै श्रुतिमतपरो वेदराद्धन्तवादः ॥७॥

श्रीमतां पादपद्मभृङ्गः—
दीनानाथ दीनबन्धु पाण्डेयः
व्या० सा० वेदान्ताचार्यः
उपाचार्यः (रीडर)
सम्पूर्णानन्द संस्कृत विश्वविद्यालये
वाराणसीस्थे ।

●

॥ ४ ॥

श्रीमद् भारतवर्ष देशमहिते प्रान्ते बिहारे शुभे,
श्रीसिद्धाश्रमवक्सराख्यनगरे सन्मण्डलेऽस्मिस्तथा ।
कौबेरे ककुभे प्रवाहिनि सुगङ्गापूर्वतीरे वरे,
श्रीलक्ष्मीशमठाधिपो बिजयते लोकार्यसेनाधिपः ॥१॥

यत् पादाब्जपरागलिप्तहृदयाः पङ्क्ति गताः श्रद्धया,
भक्ताः मन्त्रविधानतः प्रतिदिनं नीराजनं कुर्वते
साष्टाङ्गप्रणिपातकर्मविधिना सत्कुर्वते यं प्रभुम्,
विष्वक् सेनमुनि र्ह्यसौ सुललिते मन्मानसे राजताम् ॥२॥

पुनपुनासरितः शुभकूलके,
उटजमध्यसुशोभितसत्पदः ।
रविकरैस्तुलित द्युति कः प्रभुः,
यतिपतिर्हृदये मम शोभताम् ॥३॥

पूर्णे भूतलके तु वैष्णावसमाजे मौलिता यस्य वै,
ईशास्तिक्यवरञ्च भाति सुतनावासक्तिता ब्रह्मणि।
संसारं तृणवद्विचारयति यः सेनाधिपः सर्वदा,
सो मे दृष्टिपथे सदैव वसताद् योगी त्रिदण्डीश्वरः ॥४॥

नवीनगरसद्ग्रामे — औरङ्गावादमण्डले।
महालक्ष्म्यध्वरे कुर्वे स्वामिपादाभिनन्दनम् ॥५॥

श्रीमत्पादारविन्दलोलुपः
श्री निवासाचार्यः (पं० शिवपूजन त्रिपाठी)
व्याकरणसाहित्यायुर्वेदाचार्यः
शास्त्रार्थ-महारथी, सम्मानित प्राध्यापकः
पाटलिपुत्रस्थ राजेन्द्र नगर राजकीय
संस्कृत महाविद्यालयस्य।

●

॥ ५ ॥

सर्वत्रदेशे प्रथितः प्रभावादसंख्यशिष्यैः परिसेविताङ्घ्रिः।
पारे गिरां यस्यगुणाः महात्मा स्वामी त्रिदण्डी स तनोतुशंनः ॥१॥

यः शास्त्रपुञ्जस्य विचारणायां दक्षः क्रियायां च तदानुरूप्यात्।
यः ख्यातनामा तपसां निधानं स्वामी त्रिदण्डी स तनोतुशंनः ॥२॥

बाल्यान्मयि स्नेहसुधां दधानः शुभाशिषा मां समयोजयद् यः।
सोऽयं क्षमामूर्तिधरोऽवदातः स्वामी त्रिदण्डी स तनोतुशंनः ॥३॥

तत्रैवं देवदेवं गुरुवरमनिशं विप्रवंशावतंशम्
वै कृत्वा कोटियज्ञं विधिवत् विहितं येन स्वात्म प्रभावैः।
साक्षाद्ब्रह्मस्वरूपं शुभगुणजनकं वादिमत्तेभसिंहम्
नौमीड्यं देशिकं तं विमलमतिनिधिं स्वःसिवर्यं सदैव ॥४॥

श्रीस्वामिचरण-चञ्चरीकः--
भुवनेश्वर त्रिपाठी
व्याकरण-साहित्याचार्यो विशारदश्च
अध्यापकः
राजकीय कृत रामनारायण संस्कृतोच्च विद्यालयः
बरडीहा, रोहतास

●

॥ ७ ॥

मालाशोभितमञ्चमञ्जुसरलासनम् सरोजासनम्,
गीतासारपुराणवेदगदितं श्रीसम्प्रदायानुगम् ।
पुंदारापरितः भ्रमन्ति सततं यज्ञे कृतावैदिकाः,
वन्दे धर्मधुरन्धरं यतिवरं श्रेयस्करं कामदम् ॥१॥

करे स्वामी दण्डं रिपु कुलदलं नाशकरणम्
धृतं दारुपात्रं सलिलममलं पूतकरणम् ।
विभात्योर्ध्वपुण्ड्रं सकलशुभदं श्रीतुसहितम्
नमामि साक्षादजहरिहरं शुद्धवपुषम् ॥२॥

नवीनगरनामायं ग्रामस्तत्रवटेश्वरः ।
श्रीमानाचार्यतां प्राप्तः क्षत्रियः स्वामिभक्तिभाग् ॥४॥

तेनाहूतः समागम्य यज्ञेऽत्र समुपस्थितः ।
शास्त्रार्थपण्डितैः साकं श्रीदीनानाथसंज्ञकैः ॥५॥

श्रैमत्क :—
वंशीधरमिश्रः, चन्दौतवासी

●

॥ ६ ॥

दिव्ये श्री विग्रहेऽस्मिन् विलसति नितरां पूतकाषायवस्त्रम्
दक्षे पाणौ महान्तं सकलसुफलदं वज्रदण्डम् त्रिदण्डम् ।
सव्ये हस्ते पुनीतं कलिमलशमनार्थम् भृतं दारूपात्रम्
एवं श्रीस्वामिवर्यम् त्रिभुवनविदितं नौमि भूदेवदेवम् ॥१॥

भव्ये भाले विशाले शुचिविमलमये चोर्ध्वपुण्ड्रं दधानम्
अंशे यज्ञोपवीतं प्रतिपलमजिने आसने शोभमानम् ।
लोकानां रक्षणाय प्रतिपलयततं भूतले वर्त्तमानम्
एवं श्री देवदेवं द्विजकुलतिलकंस्वामिवर्यं नमामि ॥२॥

औरङ्गबादरम्ये जनपदरूचिरे श्रीमहालक्ष्मियागे
सर्वालङ्करणयुक्ते शुभनवीनगरे आसने सुप्रतिष्ठः ।
श्रीलक्ष्मीनाथदेवः समुदितमनसा पूज्यते याजमानैः
विज्ञैः विप्रैः सुघोषैः सकलजनमनः मोह्यते भासमिश्रैः ॥३॥

शुन्यशराभ्रयुग्माब्दे पूर्णेन्दुपुरूषोत्तमे,
महालक्ष्मीमखं जातं विष्वकल्याण हेतवे ॥३॥

श्रीशांडिल्यकुले जातः लब्धज्ञानं पयोव्रतं
श्रीसेनेशमहं बन्दे अम्बिकादाससेवकः ॥४॥

श्रीस्वामीचरण-चञ्चरीकः—
पं० अम्बिकादत्त त्रिपाठी
साहित्यायुर्वेदाचार्यः
भूतपूर्व प्रधानाध्यापकः
ग्राम+पो०—गोड़ारी (रोहतास)

●

॥ ८ ॥

शुभे प्रान्तेविहारे च, ह्यौरंगाबादमण्डले ।
नवीनगर ग्रामेऽत्र पौनः पुण्यसरित्तटे ॥१॥

राजते योगिराजश्च, दर्भाच्छन्नकुटीपुरः ।
गायन्ति कीर्ति वृक्षाश्च, तस्मै श्री गुरवे नमः ॥२॥

विवुधैः सेव्यमानोहि, सभायाम् विलसति तथा ।
कविता माध्यमे नैव, स्वागतं सुकरोमि ॥३॥

प्रहिणोमि शुभं पत्रं, तेन पुण्य भवेन्मम् ।
गुरूपाद प्रसादेन, परिवारस्य शुभं तथा ॥४॥

लोकञ्च परलोकञ्च, कृत कृत्यं फलान्वितम् ।
याता सर्वत्र मे सेवा, राजताम् पुरतस्तव ॥५॥

श्रीमतांपदपङ्कजभृङ्ग
अवधेशोपाध्याय (व्याकरणाचार्यः)
अध्यापकः
उच्च विद्यालय, नवीनगर रोड

●

॥ ६ ॥

श्रीमद् गुरो त्वच्चरणारविन्दं,
स्मरामि नित्यं परमसुमंगलम् ।
सुखास्पदं कल्पतरोरिव प्रदम्,
भवाब्धि पोतं शरणं गतैषिणाम् ॥१॥

दयाधार सारं निखिल निगमामनुदिनं,
ददानं सर्वार्थान् निज चरणसेवा सुकृतिने ।
महीयांसं विज्ञं वितत शत यज्ञं सुकृतिनं,
नुमः श्री सेनाख्यं जगति जयिनं विश्वशुभदम् ॥२॥

भव्याकारं फलकशयनं शंखचक्रं दधानं,
भव्यं वस्त्रं भजन-निरतं पवमान वै त्रिदण्डम् ।
विष्वक्सेनं सकल शुभदं याग कार्ये सुलग्नं,
वन्दे देवं सतत् सुखदं सर्वदा सर्वकालम् ॥३॥

योगप्रभावो विबुध प्रगेयः, वक्तुं न शक्यः किलमद्विधासैः।
तथाप्ययम् पाद सरोज युग्मे, पुष्पाञ्जलियच्छतिते उपेन्द्रः ॥४॥

श्रीमच्चरणरेणुरुषितः
कर्मकान्डि उपेन्द्राचार्यः (उपेन्द्र नारायण शुक्लः)
साहित्याचार्य पौरोहित्याचार्यश्च
श्रीत्रिदण्डिदेवसत्संगाश्रम डेहरीस्थ।

●

॥ १० ॥

पौनः सुपुण्य सरिता वहतीह दिव्या
यस्याः सुनीरपुलिने यतिराज वासः।
दर्भैः विकीर्ण विमलैः सरसैः दलैश्च
भव्ये कुटीर फलके यतिराजदर्शः ॥१॥

राराजते सुतपसा महनीयकीर्तिः
वृक्षैश्च गीतविमला तव भाति सर्वा।
शत्रुः विभेति सततं तव तापपुञ्जात्
मन्ये विभाकर मृषा ज्वलतीह वह्निः ॥२॥

कृष्ण प्रियेण रचिते कविता दलेन
पुष्पं विधाय सततं प्रकरोमि पूजां।
मत्वा तवान्तिकमिदं भुवि कृत्य सर्वम्
रक्षा भवेच्च यजनेन तवान्तिकेन ॥३॥

लक्ष्मी यागे समागत्य दत्त्वा पत्रं पुरस्तव ।
कृतकृत्यो भविष्यामि, ते दृष्ट्या च गुरो सदा ॥४॥

श्रीमतांपदपङ्कजभृङ्गः—
कृष्ण पाठक "मधुप"
साहित्याचार्यः, विशारद, स्नातक (वी० टी०)
अध्यापकः, उच्च विद्यालय नाउरस्थ, औरंगावाद (बिहार)

●

॥ ११ ॥

भगवन् त्वदीय भक्ति न कदापिविस्मरेयम् ।
निज देश जाति सेवाऽसक्तो हरे भवेयम् ॥१॥
स्वप्नेऽपि जातु नो मे परपीठनाऽभिलाषा ।
दीने सहाय हीने सततं प्रभो द्रवेयम् ॥२॥
गतिरस्तु सर्व देशे रतिरस्तु नैज वेशे ।
गुरु पादयोर्निदेशे स्वमनः प्रवर्तयेम् ॥३॥
न विभो पराऽपवादे समुदेतुमेऽनुरागः ।
परकीय वित्त भागं मनसाऽपि नो हरेयम् ॥४॥

श्रीमच्चरणाब्ज चञ्चरीकः—
राजगोपालाचारी
राजकुमार द्विवेदी शास्त्री
ग्राम—पांती (बड़वान)
पो०—बेलाई (औरंगाबाद)

॥ १२ ॥

सोनपुरेति उद्याने औरङ्गाबाद मण्डले ।
पुनपुना नदी तीरे यज्ञं चक्रे यतीश्वरः ॥१॥
नमः परमहंसाय काषायाम्बर धारिणे ।
श्री विष्वक्सेन यतीशाय त्रिदण्डिने नमो नमः ॥२॥
महालक्ष्मी मखं श्रुत्वा देवा सर्वेसमागताः ।
नानारूपधरो भूत्वा दर्शनं वितरन्ति ते ॥३॥
सर्वान्कामान् ददातीति रमादेवी महेश्वरी ।
अतएव जनैः सर्वैः कामदेति प्रचक्ष्यते ॥४॥

श्रीमतांचरणभृङ्गः—
सुरेश त्रिपाठी व्यकरण-
साहित्याचार्यः
ग्राम — तिवारीडीह
जिला — रोहतास

●

॥ १३ ॥

काषायवस्त्रेण विभूषिताङ्गं
लोकोपकाराय कृत-प्रयत्नम् ।
सुशोभितं दण्ड त्रयेण पाणिम्
त्रिदण्डिनं तं शिरसा नमामि ॥१॥
श्री विष्वक्सेननामानं आचार्यपद भूषितम् ।
श्री विष्वक्सेनरूपं च त्वमहं शरणं गतः ॥२॥

रक्ष रक्ष ! महाभाग पवित्रं कुरू मानसम् ।
कामादिदोषरहितं भूयो-भूयो नमाम्यहम् ।।३।।
अद्य मे सफलं नाथ ! जीवनं तव दर्शनात् ।
नमस्तुभ्यं - नमस्तुभ्यं शरणागतवत्सलः ।।४।।

भवदीय :—
विन्ध्येश्वरी मिश्रः
शिवसागर (रोहतास)

●

।। १४ ।।

सर्वंकृतं सुकृतिनः सततं श्रयन्तो
गीतोपदेशमनिशं शुभदं पिबन्तः ।
नामान्यहो जय जयेति च ये गृणन्तो
धन्यास्त एव भुवनं किल भूषयन्तः ।।१।।

महामोहमायोर्मिभिर्ग्रस्तोऽज्ञः
सदाशङ्कितः कम्पितः वै भवाब्धौ ।
समागत्य सम्यग् भवत्पादपोते
त्रिदण्डीश्वरं स्वामिनं संश्रयेऽहम् ।।२।।

श्रीमच्चरणचञ्जरीकः—
मिथिलेश कुमार दुबे
व्याकरणवेदान्ताचार्य
ग्राम+पो— तरार (औरंगाबाद)

॥ १५ ॥

श्रीरामकृष्णपदपङ्कजसेवनेन

श्रीरामकृष्णकृपया जगदार्यवर्यः ।

देदीप्यते ह्यवनिमण्डल मस्तकेऽस्मिन्

श्री स्वामीवर्यचरणौ शरणं प्रपद्ये ॥१॥

सम्यक् समाधिविधिना परित प्रदेहः

संराजते फलकपृष्ठवरे मनोज्ञः ।

कीर्तिः विराजते-यस्य दिगन्तरेषु,

तच्छ्रीत्रिदण्डिचरणौशरणं प्रपद्ये ॥२॥

भवदीयशिशुः-

पं० अनन्तकेशवाचार्य (अनिल कुमार त्रिपाठी)

वेदव्याकरणशास्त्री

नवीनगर (औरंगाबाद)

●

॥ १६ ॥

सफल हुए हैं उन्हीं के जीवन, जो स्वामी शरणों में आ चुके हैं।

वही हमेशा हरे-भरे हैं, जो स्वामी चरणों को पा चुके हैं॥१॥

न पा सका, इन्हें कोई भी बल से,

न पा सका इन्हें कोई भी छल से।

वही दया को भी पा चुके हैं,

जो स्वामी शरणों में आ चुके हैं॥२॥

जहाँ भी जिनने इन्हें पुकारा, दिया है स्वामी ने उन्हें सहारा।
कटे हैं उनके दुखों के बंधन, जो स्वामी चरणों को पा चुके हैं ॥३॥
कहे "सिद्धेश्वर" सुनले हे प्यारे, वे भी बनें, जिन्हें विधि बिगारे।
लाखों कटे भी फूले-फले हैं जो स्वामी चरणों में आ चुके हैं ॥४॥

श्री चरणों का सेवक :—
सिद्धेश्वर पाठक
साहित्याचार्य, एम० ए०, बी० टी०
बुधुआ, जपला, पलामू।

●

॥ १७ ॥

अभिनन्दन के साथ मैं वन्दन अर्चन करने आया हूँ।
शब्द पुष्प का हार हे गुरुवर अर्पण करने आया हूँ ॥ टेक ॥
मोती चुन-चुन कर लाया, अश्रु-कण से धो धो कर,
कई जन्मों से थका हुआ हूँ, मैं पापों को ढो ढो कर।
काषाय चीर देदीप्यमान का दर्शन करने आया हूँ ॥१॥
हूँ अबोध अकिञ्चन बालक, शरणागत हे करूणेश्वर,
रवि रश्मि सा तेज पुंज, श्री सम्प्रदाय हे रक्षेश्वर।
इस यज्ञ भूमि के रज कण को स्पर्शन करने आया हूँ ॥२॥
शीतलता इतनी पाता हूँ, जितना मयंक में होती है,
उष्णता इतनी पाता हूँ, जितना रवि व्योम चमकता है।
हे जगद्गुरु मैं चरणामृत को ग्रहण करने आया हूँ ॥३॥

हुई धन्य धरा यह नवीनगर की, औरंगाबाद भी धन्य हुआ,
पग रोक लिए पुन-पुन के तट, अद्भुत नैमिषारण्य हुआ।
"प्यासा" पग रेणु का भिक्षुक अभिनन्दन करने आया हूँ ॥४॥

श्री चरणामृत का प्यासा—
मधुसूदन दूबे "प्यासा"
ग्राम—पो०-कारा, जिला-औरंगाबाद

●

॥ १८ ॥

हे मुनिवर ! तपपुंज ! तेजमय ! मुक्ति - दाता दानव्रती।
तव दर्शन के लिए लालायित, रहते हैं नित ज्ञानी यति।

कृपा-दृष्टि हो जाती जिस पर, जन-मानस का अधिकारी,
हो जाता है, जगद्गुरु वह या त्रिदण्ड तुम - सा धारी।

जो किंकर भी गिरा शरण में, शंकर - सा वरदान दिया,
कहता वह, गुरु कृपा अरे यह जिसने मुझे महान किया।

विधिवत् पूजा जो त्रिदण्डी स्वामी की करता अनुरागी,
पुत्रवान धनवान होत नर निश्चय ही वह बड़भागी।

है पूजा की विधि अनेक - जन तन मन धन से है करता,
एक अकिंचन हूँ मैं केवल - गिरा शरण, डरता डरता।

पूजा की विधि से अविज्ञ हूँ अर्चन का भी ज्ञान नहीं,
पूजोपहार की वस्तु नहीं कुछ जिसको करूँ गुमान कभी।
जो कुछ है वह तन है मेरा मन से तुझको अर्पित कर,
है विश्वास "मदन मोहन" को ठुकरायेंगे नहीं गुरुवर।

अकिंचन चरण-सेवक :—
मदन मोहन पाण्डेय
ग्राम—मुरली बेलाई
जिला—औरंगाबाद

●

॥ १९ ॥

जय देव दया करुणा सिन्धौ
जय ताप नसावन पाप दहो
इन्दिरा के नयनों के तारे
घन घोर तिमिर को पार करो।

जीवन के अर्णव में चंचल
बड़वानल की है जोर सदा
इस दीन दास पर दया दृष्टि
देकर सेवक को करें मुदा।

जीवन दर्दों का क्रीड़ास्थल
मैं भले भला या बुरा सही

त्रिवेदीशत्रुघ्न को केवल
स्वामी चरणों की आश रही।

श्रीस्वामिपदकमलमधुप—
शत्रुघ्न त्रिपाठी
ग्रा०—पो०-चन्दा, जिला-औरंगाबाद

●

॥ २० ॥

हे दयामय आप ही इस क्षेत्र के आधार हैं।
आप ही करतार हैं यह यज्ञ सृजनहार हैं॥
प्रभु की समाधि का कभी हम ऋण चुका सकते नहीं।
बिन कृपा के यज्ञ सुख का सार पा सकते नहीं॥
दीजिए यह मति बनें हम सात्विकी संसार में।
मन हो मंजुल धर्ममय और तन लगे उपकार में॥
मुनिवर सदा उपकार तूने सर्वदा हम पर किये।
उपहार प्रति उपकार में क्या दूँ तुम्हें इसके लिये॥
श्री रामकृष्ण ललाम जिसका सर्वमंगल धाम है।
प्रथम उस सर्वेश को श्रद्धा समेत प्रणाम है॥
हे देव-देव प्रणाम देव प्रणाम लाखो बार है।
फिर-फिर प्रणाम-प्रणाम देव प्रणाम वारम्बार है॥

निवेदक—
सत्येन्द्र कुमार मिश्रः
शिवसागर, नवीनगर (औरंगाबाद)

॥ २१ ॥

आपने भार महि का उतारे।
जयति जय श्री त्रिदण्डी हमारे॥
ग्राह को आपने जा उबारा।
यज्ञ मण्डप में ला गंग धारा॥
व्याल को भाल पर नाथ धारे॥१॥ आपने भार... जयति जय...
कष्ट में थे कभी ब्रह्मचारी।
चन्द्र ने तीर धोखे में मारी॥
शीत शर कोप कर के निवारे॥२॥ आपने भार... जयति जय...
काल शर से हुआ शिशु था घायल।
दर्शकों का हृदय भी था कायल॥
बाल को शक्ति से थे उबारे॥३॥ आपने भार... जयति जय ...
जिन्दगी भर करुँगा गुलामी।
होगी पद रज से मेरी नीलामी॥
हूँ शरण आप के ही दुआरे॥४॥ आपने भार... जयति जय ...

समर्पक :—
श्री चरणाश्रित लक्षाधिक शिष्यों
में लघुतम—
गदाधर रामानुज श्री वैष्णवदास
गंगाविष्णु
श्रीत्रिदण्डिदेव शान्तिवन आश्रम
खिड़किया घाट, राजघाट, वाराणसी।

रचियता :—
कवि रामव्रत सिंह यादव
ग्राम—गद्दोचक
पो०—सैफपुर
जिला—वाराणसी

॥ २२ ॥

श्रीवैष्णवधरम जेकर अमर धाम बनल ना ।
गोदा माता के दुलरुआ दानी लाल बानी ना ॥टेक॥
विष्णुचित्त स्वामी के खाली गोदिया गोदा जी भरली ।
दुलहिन बनि के रंगनाथ के कलियुग में अचरज कईली ॥
अजबे शादी देखे खातिर राजदरबार लागल ना ॥१॥
श्री रामानुज भाई बनि के, गोदा के लाजवा रखलन ।
गोदा के भाखल परसदिया, अपने भगवन के दिहलन ॥
बगसर बास कईली गोदा बैकुण्ठधाम बनल ना ॥२॥
अयोध्या में सीता बनिके, गोदा जी मनवाँ रखलीं ।
बृद्धखैरा में राधा रूपवा, जंगल में तपवा कईलीं ॥
डिहरी विजय राघव भगवन के सिंगार भईलीं ना ॥३॥
दसो दिव्य सूरि अईसन, गोदाजी जी सब तीरथ कईलीं ।
तपबा से परगट कई-कई, पैदल यतिवर के भरमवलीं ॥
योगवा - तपवा से भिजल यति के देह भईल ना ॥४॥
गूँगा बोलेला दरसन से, बहिरो सुनेला बतिया ।
पापी तरेला देखला से, श्री बैष्णव के बा रितिया ॥
श्री रामानुज स्वामी रउरा पाँव परिना ॥५॥

दासानुदास
रामजी पाठक
अभियन्ता
सिंचाई विभाग, डेहरी

॥ २३ ॥

परम श्रद्धेय गुरुदेव !

अपने शिष्यों एवं सामान्य श्रोताओं के भी अज्ञान-अंधकार को दूर करने वाले आप जगद्गुरु हैं। भौतिक संसार के भयतापों से त्रस्त मानव आपके सान्निध्य से शान्ति प्राप्त करते हैं तथा आपके अध्यात्मिक विश्लेषण-विवेचन से वितृष्णा एवं उद्वेग को शमित करते हैं। पलायनवाद और भोगवाद, द्वेष, क्रोध, आसक्ति और मोह को दूर करने में आपके द्वारा दिये गये बादरायण रचित 'पाण्डव गीता' पर प्रवचन प्रभावकारी है। गुरु की कृपा से हृदय की आँखें खुलती हैं और संसार रूपी रात्रि के दोष-दुःख मिट जाते हैं-'उघरहिं विमल विलोचन ही के। मिटहिं दोष-दुःख भवरजनी के' आप श्रीगुरुदेव का चरण-नख वह मणि है जिसके स्मरण करने से हृदय को दिव्य दृष्टि प्राप्त होती है—'श्री गुर-पद-नखमनि गन जोति। सुमिरत दिव्य दृष्टि हियँ होती' ॥ साक्षात् ब्रह्मा, विष्णु और महादेव के प्रतिरूप गुरुदेव ! आप परम श्रद्धेय, नमस्य, पूज्य और प्रातः स्मरणीय हैं। आपकी वन्दना करते हम अघाते नहीं।

अद्वितीय महर्षि !

आप एक आदर्श ऋषि, मुनि, चिन्तक, विश्लेषक और भाष्यकार हैं। वाल्मीकि की तरह सद्ग्रन्थों की रचना, महर्षि व्यास की भाँति पौराणिक ग्रन्थों की व्याख्या और पतंजलि की तरह वेद, उपनिषद्, स्मृति तथा व्याकरण पर भाष्य प्रस्तुत कर हम सायान्य मानवों का कल्याण करने वाले महाप्रभो ! आप साक्षात् धर्मावतार हैं। आप अपनी तपश्चर्या से अभी

नबीनगर को अध्यात्ममय बनाये हुए हैं। आपकी सत्संगति स्वर्गिक आनन्द देनेवाली परम कल्याण कारक है। आप जिस स्थान पर पदार्पण करते हैं, वह तपोभूमि बन जाता है। आपकी पर्ण कुटी के दर्शन मात्र से अन्तर्मन में सात्विकता भरती है। धर्म, भक्ति और ज्ञान का आप में समन्वय है और इस तरह आप तीर्थराज प्रयाग हैं। आप महाशय, महात्मा और समदर्शी हैं।

विलक्षण आदित्य !

आदित्य अपनी रश्मियों से जग को आलोकित करता है तो अपने प्रचण्ड ताप से जीवों को प्रताड़ित भी करता है। वह जीवन-रस उड़ेलता है, तो उसे (रस, जल को) शुष्क भी कर देता है। आप तो विलक्षण आदित्य हैं जो अहर्निश ज्ञानामृत ही उड़ेलते रहते हैं। आप ऐसे आदित्य हैं जिनकी किरणों में एक ओर मोह-तम को विनष्ट करने की अपरिमित शक्ति है, तो दूसरी ओर उनमें चतुर्दश विध्या के पूर्ण प्रकाश में सुधाकर की आह्लादकता और अक्षयवट की शीतलता है। भगवन्! आपके आदित्यत्व में गीता प्रतिपादित विष्णुत्व का साक्षात् रूप है। सचमुच आप सदृश आदित्य को पाकर भक्तिमय नबीनगर की वसुन्धरा पुलकित हो उठी है। क्यों न हो, नबीनगर पर आपकी विशेष कृपा जो रही है। चार-चार बार यहाँ यज्ञ सम्पन्न कराकर और बीच बीच में भी समय देकर आपने हमें कृतार्थ किया है। सम्प्रति दो माह से ज्ञानामृत का पान करानेवाले हे भक्त वत्सल ! सदैव आप जैसे विलक्षण आदित्य की स्नेह-रश्मियाँ हमें मिलती रहें, यही हमारी प्रार्थना है।

परम वीतरागी !

राग-द्वेष से परे रहने वाले वीतरागी संन्यासी, आपकी विद्वता तथा सहज बोधगम्य उक्तियों से और गूढ़तम विषयों के सरल विवेचन करने वाले आकर्षक प्रवचनों से भक्तिलोक सदा आलोकित रहा है। आपकी सादगी, सरलता, सात्विक वृति एवं भौतिक प्रलोभनों से विमुक्त कर्म - परायणता सात्विक जीवन जीने की प्रेरणा देती है। आप सदृश वीतरागी कर्म संन्यस्त महायोगिराज से भक्ति जगत् को प्राप्त सत्प्रेरणाएँ अमिट एवं चिर स्मरणीय रहेंगी। आज जिन राजसी आँखों से हम एक ही स्वर्ग और वसुधा की वासन्ती सुषमा का अवलोकन कर रहे हैं, कल इन्हीं आँखों से हमें मरू-मरीचिका की विभीषिका देखनी पड़ेगी। आपके सान्निध्य से स्वर्ग बना यह स्थान आपके बिछोह से कष्टकर होगा। जिस विलक्षण पञ्चवटी की मधुर छाया मे ज्ञान, भक्ति और कर्ममय राम-सीता तथा लक्ष्मण का रूप प्रतिबिम्बित हो रहा है, कल वही विषवटी बन जायेगी। प्रवचन और यज्ञ का आध्यात्मिक वातावरण भौतिकता से आविष्ट हो जायेगा और हम इसमें लिप्त हो जायेंगे।

एतद् परिस्थिति में आपके स्नेह का अवलम्ब ही सात्विक जीवन-यात्रा का सहायक होगा। आपके वियोग की आशंका से अधीर और विह्वल हृदय वाले हम नबीनगर के लोग तभी आश्वस्त हो सकेंगे जब आप हमें 'रहब सदा पुर आवत जाता' का आश्वासन दें। आपके चरणों में भक्ति निवेदित करने वाले अश्रुपूरित हम हैं—

यज्ञ-समिति, नबीनगर के सदस्यगण

एवं सकल नगरवासी

॥ २४ ॥

विलक्षण मुनिराज !

आप परम पावन गंगा - तट पर पर्ण - कुटी में पवित्र कुशासन पर पद्मासन सँवारे, काषायवस्त्र धारे, ललाट पर विकट उर्ध्वपुण्ड्र, जैसे दो हीरक - स्तम्भों के मध्य लाल पुखराज दीपित हो, रचाये, यज्ञोपवीत पहने, दाहिने कर में भयंकर त्रिदण्ड को सम्हाले, गंगाजल से भरा दिव्य दारुपात्र बगल में रखे तथा गले में सद्यः प्रस्फुटित सुगंधमय बहुरंगे कमल - पुष्पों का माल्य धारण किये हुए ठीक वैसे ही प्रतीत होते हैं मानों धर्म साकार प्रकट हो। आप नित्य सत्संग - सभा करते हैं जिसमें अञ्जलि - बद्ध भक्त-मण्डली आपके श्रीमुखारविन्द से निस्सृत वेदवाणी - सुधा को अनवरत चूसती है।

वैष्णवाग्रगण्य :—

आपने प्रज्वलित वेदिका में तप्त शंख - चक्र भक्तों के बाहुमूल में छापकर लाखों जनों को अपना परम स्नेही शिष्य बना सन्मार्ग दिखलाया है, सद्ज्ञान दिया है। आप सैकड़ों शुद्ध वैदिक यज्ञों के एकमात्र अधीश्वर साक्षात् यज्ञदेव हैं। आप सर्वशास्त्रविद् हैं। जितेन्द्रिय हैं। दिग् - दिगंत में आपकी जय - वार्त्ता घोषित है। आप अध्यात्म विभूति - प्राप्त हैं। आप विशिष्टाद्वैतमत के परम पोषक परमकुलीन विप्रकुलोत्पन्न महा-संन्यासी हैं।

श्रेष्ठ परिव्राजक ! :—

आप लुप्त तीर्थों के उद्धार करने, जन-समाज को ईश्वरनिष्ठ बनाने साधु - संन्यासियों में फैले दुराचार दूर करने एवं अध्यात्म जीवन को

पुनर्संगठित करने का व्रत लेकर ही तो समस्त आर्यावर्त में भ्रमण करते हैं। आप विद्वता - युक्त अकाट्य तर्कों द्वारा नास्तिकों एवं जड़वादियों को परास्त कर उनकी जड़ में कुठाराघात करते हैं। आपकी बोली बहुत सीधी एवं सरल है, जिसमें बिजली की सी शक्ति है जो संशयात्मा को तत्क्षण ठीक रास्ते पर लगा देती है। आप रामप्यारे हैं न ! अतः निडर हैं। आपकी दृष्टि में शनि - का सा असर है और मुखमण्डल पर आत्म - तेज का आलोक। वेदान्त के रंग में रंगे कस्तूरी की गंध की तरह ख्याति प्राप्त विश्ववंद्य योगिवर, आपको नमन है।

भक्तोद्धारक ! :—

यतिवर ! आपभक्तों के अन्तः-करणों में ज्ञान की वह मशाल हैं जो सदा के लिए संसार को आलोकित करती रहेगी। आप जहाँ बैठते हैं वह जगह मन्दिर हो जाती है और जहाँ पाँव रखते हैं वह जगह दिव्य आलोक से जगमगा उठता है। आपके दर्शन से प्यास मिटकर जनता को तृप्ति मिल जाती है और आपके पास से देखकर - सुनकर लौटने वाली जन - भीड़ आप से एक नयी शक्ति, नया ओज, नयी प्रेरणा तथा एक नयी दृष्टि लेकर ही लौटती है। आप उत्साहवर्द्धक हैं स्वामी ! वस्तुतः आप समस्त आर्यों के बचपन का हिंडोला, यौवन का परमानन्द और बुढ़ापे का बैकुण्ठ हैं।

समर्पक :—

अवधेश कुमार पाण्डेय

ग्राम–पाण्डेय भलुआहीं (रोहतास)

॥ २५ ॥

जय कल्प-तरु-सम वरद सुखद शीतल शरण यतिराज की।
भव-सिंधु तरल तरंग मँह तरणी कृपा मुनिराज की ॥
भगवदनन्त सुपद्म - पद - मधु - लिप्त मधुकरराज की।
फुँकार से अघ काँपता जय जयति जय अहिराज की ॥१॥
सुषमा मनु पंचवटी की अहो! अँवराई में आजु ठगाई रही।
धनु आकृति की मन्दाकिनी भी पुनपुन सरिता में लुकाई रही ॥
जँह ईश बसैं यतिनायक बन, तहँ सुरपुरी शान गँवाई रही।
पद-पङ्कज-चुम्बित कन-कन में, बेमोल ही मुक्ति बिकाई रही ॥२॥
पद-पङ्कज-मधु-रस-माधुरी उपर अमृत के शत - कुम्भन्ह वारूँ।
शुचि पर्ण कुटी की छाँव तजि, नहीं इन्द्रपुरी के विलास निहारूँ ॥
पद-द्वन्द्व में उलझै मन-मधुकर, रस-पान-निरत यह जीवन हारूँ।
प्राणों के रस-कन से सींचकर, तव प्रीति की बल्लरी नाथ सँवारूँ ॥३॥

गांगवारि - सम - शीतल - सेव्यम्,
शारदादिकलरागसुगेयम् ॥
चित - व्योम्नि सततं शुभधार्यम्।
देहि नाथ! पद-पङ्कज-दास्यम् ॥४॥

श्रीचरणाश्रित :—

डा० सुदामा सिंह, एम० ए० पी० एच० डी०
प्रोफैसर एवं अध्यक्ष, श्रम एवं समाज कल्याण
-विभाग, म० वि० वि०-बोधगया।

卐 ॐ श्रियै नमः 卐

# ऋग्वेदीय-श्रीसूक्तम्

## अथ श्रीसूक्तविधिः

### अथ विनियोगः ।

ॐ अस्य "हिरण्यवर्णा" मिति पञ्चदशर्चस्य श्रीसूक्तमहामन्त्रस्य श्रीआनन्दकर्दमश्रीदचिक्लीतेन्दिरासुता ऋषयः । जातवेदाग्निश्च श्रीमहालक्ष्मीर्देवता । आद्यत्रयस्यानुष्टुप्छन्दः । "कांसोस्मी" त्यस्य वृहती छन्दः । "चन्द्रां प्रभासा" मिति द्वयोस्त्रिष्टुप्छन्दः । "उपैतु मां देवसखः" इत्यष्टकस्यानुष्टुप्छन्दः । अन्त्यायाः प्रस्तार-पंक्तिश्छन्दः । "हिरण्यवर्णा" मिति बीजम् । "कांसोस्मी" ति शक्तिः । "कीर्तिमृद्धि ददातु म" इति कीलकम् । मम सकलाभीष्ट-सिद्ध्यर्थे धनधान्यसकलसम्पत्समृद्ध्यर्थे श्रीमहालक्ष्मीप्रीतिद्वारा सर्वविधपुरुषार्थसम्पत्तये श्रीसूक्तमहामन्त्रजपे होमे श्रीमन्नाराय-णार्चने च विनियोगः ।। इति ।।

### अथ ऋष्यादिन्यासः ।

ॐ श्रीआनन्दकर्दमश्रीदचिक्लीतलक्ष्मीपुत्रेभ्य ऋषिभ्योनमः शिरसि । ॐजातवेदाग्निश्रीमहालक्ष्मीदेवतायै नमो हृदये ।ॐ अनु-

ष्टुबादिछन्देभ्यो नमो मुखे। "ॐ हिरण्यवर्णा" मितिबीजाय नमो नाभौ। ॐ "कांसोस्मी" ति शक्तये नमः कटिदेशे। सकलाभीष्टसिद्ध्यर्थे धनधान्यसकलसम्पत्समृद्ध्यर्थे श्रीलक्ष्मीप्रीतिद्वारा सर्वविधपुरुषार्थसम्पत्तये श्रीसूक्तजपे होमे श्रीमन्नारायणार्चने च विनियोगाय नमः सर्वाङ्गेषु ॥ इति ॥

## अथ ऋचाद्यङ्गन्यासः ।

ॐ "हिरण्यवर्णा" मिति शिरसि। ॐ "तां म आवह जातवेद" इति नेत्रयोः। ॐ "अश्वपूर्वामिति कर्णयोः। ॐ "कांसोस्मिता" मिति नासापुटयोः। ॐ "चन्द्रां प्रभासा" मिति मुखे। ॐ "आदित्यवर्णे" इति कण्ठे। ॐ उपैतु मा" मिति बाह्वोः। ॐ "क्षुत्पिपासामला" मिति हृदये। ॐ "गन्धद्वारा" मिति नाभौ ॐ "मनसः काम" मिति गुह्ये। ॐ "कर्दमेने" ति पायौ। ॐ "आपः सृजन्त्विति ऊर्वोः। ॐ आर्द्रां पुष्करिणीं यष्टिमी" ति जान्वो। ओम् आर्द्रां पुष्करिणीं पुष्टि' मिति जङ्घयोः। ओम् 'तां म आवह जातवेद" इति पादयोः ॥ इति ॥

## अथ करन्यासः ।

ओम् श्रां नमो भगवत्यै महालक्ष्म्यै हिरण्वर्णायै अंगुष्ठाभ्यां नमः। ओम् श्रीं नमो भगवत्यै महालक्ष्म्यै हिरण्यै तर्जनीभ्यां नम.। औम् श्रुं नमो भगवत्यै महालक्ष्म्यै सुवर्णरजतस्रजायै मध्यमाभ्यां नमः। ओम् श्रैं नमोभगवत्यै महालक्ष्म्यै चन्द्रायै अनामिकाभ्यां

नमः । ओम् श्रौं नमो भगवत्यै महालक्ष्म्यै हिरण्मय्यै कनिष्ठिकाभ्यां नमः । ओम् श्रः नमो भगवत्यै महालक्ष्म्यै लक्ष्म्यै करतलकरपृष्ठाभ्यां नमः ।। इति ।।

## अथ हृदयादिन्यासः ।

ओम् श्रां नमो भगवत्यै महालक्ष्म्यै हिरण्वर्णायै हृदयाय नमः । ओम् श्रीं नमो भगवत्यै महालक्ष्म्यै हिरण्यै शिरसे स्वाहा । ओम् श्रुं नमो भगवत्यै महालक्ष्म्यै सुवर्णरजतस्रजायै शिखायै वषट् । ओम् श्रैं नमो भगवत्यै महालक्ष्म्यै चन्द्रायै कवचाय हुम् । ओम् श्रौं नमो भगवत्यै महालक्ष्म्यै लक्ष्म्यै वीर्यायि अस्त्राय फट् । ओम् आं ह्रीं क्रों ऐं श्रीं क्लीं ब्लूं सौं रं वं श्रीं ओम् भूर्भुवः स्वरोमिति दिग्बन्धः ।। इति ।।

## अथ ध्यानम् ।

अरुणकमलसंस्था तद्रजःपुञ्जवर्णा
करकमलधृतेष्टाऽभीतियुग्माम्बुजा च ।
मणिकटकविचित्रालङ्कृता कल्पजालैः
सकलभुवनमाता सन्ततं श्रीः श्रियै नः ।।१।।

## अथ श्रीदेविपूजाविधिः ।

हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह ।।१।।

ओम् श्रीदेव्यै नमः आवाहनं समर्पयामि ॥१॥

तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।

यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥२॥

ओम् श्री देव्यै नमः आसनं समर्पयामि ॥२॥

अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम् ।

श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् । ॥३॥

ओम्श्रीदेव्यै नमः अर्घ्यं समर्पयामि ॥३॥

कांसोस्मितां हिरण्यप्रकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् ।

पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥४॥

ओम्श्रीदेव्यै नमः पाद्यं समर्पयामि ॥४॥

चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् ।

तां पद्मनेमिं शरणमहं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे ॥५॥

ओम् श्रीदेव्यै नमः आचमनीयकं समर्पयामि ॥५॥

आदित्यवर्णे तपसोधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः ।

तस्यफलानि तपसा नुदन्तु मायांतरायांश्च बाह्या अलक्ष्मीः ॥६॥

ओम् श्रीदेव्यै नमः स्नानं समर्पयामि ॥६॥

उपैतु मां देवसखः कीर्तिश्च मणिना सह ।

प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे ॥७॥

ओम् श्रीदेव्यै नमः वस्त्रं समर्पयामि ॥७॥

क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् ।
अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् ॥८॥
ओम् श्रीदेव्यै नमः मुक्तासंवीतभूषणानि समर्पयामि ॥८॥

गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानाम् तामिहोपह्वये श्रियम् ॥९॥
ओम् श्रीदेव्यै नमः गन्धानुलेपनं समर्पयामि ॥९॥

मनसः काममाकूतिं वाचः सत्यमशीमहि ।
पशूनाम् रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥१०॥
ओम् श्रीदेव्यै नमः बिल्व-तुलसी-पुष्पाणि समर्पयामि ॥१०॥

कर्दमेन प्रजा भूता मयि संभव कर्दम ।
श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥११॥
ओम् श्रीदेव्यै नमः धूपमाघ्रापयामि ॥११॥

आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे ।
नि च देवीं मातरं श्रियं वासय मे कुले ॥१२॥
ओम् श्रीदेव्यै नमः दीपं दर्शयामि ॥१२॥

आर्द्रां पुष्करिणीं यष्टिं पिङ्गलां पद्ममालिनीम् ।
चन्द्राम् हिरण्मयीं लक्ष्मीं जातवेदो ममावह ॥१३॥
ओम् देव्यै नमः घृतशर्करायुतं पायसं निवेदयामि ॥१३॥

आर्द्रां पुष्करिणीं पुष्टिं सुवर्णां हेममालिनीम् ।

सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो ममावह ॥१४॥

ओम् श्रीदेव्यै नमः सप्रदक्षिणनमस्कारं समर्पयामि ॥१४॥

ताम् म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।

यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान्विन्देयं पुरुषानहम् ॥१५॥

ओम् श्रीदेव्यै नमः सपुष्पाञ्जलिविसर्जनं समर्पयामि ॥१५॥

॥ इति ॥

अथ श्रीपूजाप्रमाणम् ।

आद्ययावाहयेद्देवीं श्रीसूक्तस्य नृपेश्वरीम् ।

द्वितीययासनं दद्यादर्घ्यं चैव तृतीयया॥श्रीसूक्तभाष्यश्लो०१॥

दद्यात्पाद्यं चतुर्थ्या च पञ्चम्याचमनीयकम् ।

षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वस्त्रमेव च ॥२॥

मुक्तासंवीतमष्टम्या भूषणानि च पार्थिव ।

गन्धं नवम्या संदद्याद्दशम्या पुष्पमेव च ॥३॥

एकादश्या तथा धूपं द्वादश्या ज्योतिरेव च ।

पायसं घृतसंयुक्तं खण्डशर्करया युतम् ॥४॥

निवेदयेत् त्रयोदश्या चतुर्दश्या प्रदक्षिणम् ।

उद्वासयेत्पञ्चदश्या लक्ष्मीं तां लोकमातरम् ॥५॥

स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनं नृप ॥६॥

॥ इति ॥

## —श्रीपूजानियमः—

वंशासने तु दारिद्र्यं पाषाणे व्याधिसंभवः ।
धरण्यां दुःखसंभूतिः दौर्भाग्यं छिद्रिदारुजे ।
तृणे धनयशोहानिः पल्लवे चित्तविभ्रमः ॥पञ्चरात्र॥
अनामिका शान्तिदोक्ता मध्यमायुष्करी भवेत् ।
अंगुष्ठा पुष्टिदा प्रोक्ता तर्जनी मोक्षदायिनी॥स्कन्दपुरा०॥
नांगुष्ठैर्मर्दयेद्देवं नाधः पुष्पैः समर्चयेत् ।
कुशाग्रैर्न क्षिपेत्तोयं वज्रपातसमं भवेद् ॥आचारमयूख॥
त्रिर्देवेभ्यः प्रक्षालयेत् सकृत्पितृभ्यः ॥आपस्तम्ब॥
नाक्षतैरर्चयेद्विष्णुं न तुलस्या गणाधिपम् ।
न दूर्वया यजेद्दुर्गां विल्वपत्रैश्च भास्करम् ॥आह्निक॥
अधोवस्त्रधृतं चैव जलेऽन्तः क्षालितं च यत् ।
देवतास्तन्न गृहणन्ति पुष्पं निर्माल्यतां गतम् ॥स्कन्दपुरा॥
शिवे विवर्जयेत्कुन्दमुन्मत्तं च तथा हरौ ।
देवीनामर्कमदारौ सूर्यस्य नगरं तथा ॥स्कन्द॥
मध्यमानामिकामध्ये पुष्पं संगृह्य पूजयेत् ।
अंगुष्ठतर्जनीभ्यां तु निर्माल्यमपनोदयेत् ॥कालिकापुरा॥
पत्रं वा यदि वा पुष्पं फलं नेष्टमधोमुखम् ।

यथोत्पन्नं तथा देयं विल्वपत्रमधो मुखम् ॥ आह्निक ॥
पर्णमूले भवेद्व्याधिः पर्णाग्रे पापसंभवः ।
जीर्णपत्रं हरत्यायुः शिरा बुद्धिविनाशिनी ॥ आचारार्क ॥
आदौ चतुष्पादतले प्रकुर्य्याद्
द्वौ नाभिदेशे मुखमण्डलैकम् ।
सर्वेषु चाङ्गेषु च सप्तवारं
निराजनं भक्तजनः प्रकुर्य्यात् ॥ नारदपञ्चरात्र ॥ इति ॥

# अथ श्रीसूक्तान्तर्गत त्रिपञ्चाशत् पद्ममंत्रावलिः ।

[१] ओम् हिरण्यवर्णायै नमः [२] ओम् हरिण्यै नमः [३] ओम् सुवर्णस्रजे नमः [४] ओम् रजतस्रजे नमः [५] ओम् चन्द्रायै नमः [६] ओम् हिरण्मय्यै नमः [७] ओम् लक्ष्म्यै नमः (८) ओम् अनपगामिन्यै नमः (९) ओम् अश्वपूर्वायै नमः (१०) ओम् रथमध्यायै नमः (११) ओम् हस्तिनादप्रबोधिन्यै नमः (१२) ओम् श्रियै नमः (१३) ओम् देव्यै नमः (१४) ओम् मायै नमः (१५) ओम् कायै नमः (१६) ओम् सोस्मितायै नमः (१७) ओम् हिरण्यप्राकारायै नमः (१८) ओम् आर्द्रायै नमः (१९) ओम् ज्वलन्त्यै नमः (२०) ओम् तृप्तायै नमः (२१) ओम् तर्पयन्त्यै नमः (२२)ओम् पद्मेस्थितायै नमः (२३)ओं पद्मवर्णायै नमः (२४) ओम् चन्द्रायै नमः (२५) ओम् प्रभासायै नमः (२६) ओम् यशसायै नमः (२७) ओम् ज्वलन्त्यै नमः (२८) ओं देवजुष्टायै नमः (२९) ओम् उदारायै नमः (३०) ओम् तायै नमः

(३१) ओम् पद्मनेम्यै नमः (३२) ओम् आदित्यवर्णायै नमः (३३) ओम् कीर्त्यै नमः (३४)ओम् ऋद्ध्यै नमः (३५) ओम् गन्धद्वारायै नमः (३६) ओम् दुराधर्षायै नमः (३७) ओम् नित्यपुष्टायै नमः (३८) ओम् करीषिण्यै नमः (३९) ओम् ईश्वर्यै नमः (४०) ओम् मनसः कामायै नमः (४१) ओम् वाचामाकूत्यै नमः (४२) ओम् सत्यायै नमः (४३) ओम् पशूनां रूपायै नमः (४४) ओम् अन्नस्य यशसे नमः (४५) ओम् मात्रे नमः (४६) ओम् पद्ममालिन्यै नमः (४७) ओम् पुष्करिण्यै नमः (४८) ओम् यष्टये नमः (४९) ओम् पिङ्गलायै नमः (५०) ओम् तुष्टये नमः (५१) ओम् सुवर्णायै नमः (५२) ओम् हेममालिन्यै नमः (५३) ओम् सूर्यायै नमः ।। इति श्रीसूक्तान्तर्गतत्रिपञ्चाशत्संख्याकैः लक्ष्मीमंत्रैः श्रीदेव्यर्चनं हवनं च कुर्यात् ।।इति।।

## अथ श्रीचक्रम्

तान्होवाच भगवाञ्श्रीचक्रं व्याख्यास्याम इति। त्रिकोणं त्र्यस्रं कृत्वा तदन्तर्मध्यवृत्तमानयष्टिरेखामाकृष्य विशालं नीत्वा-ग्रतो योनिं कृत्वा पूर्वयोन्यग्ररूपिणीं मानयष्टिं कृत्वा वां सर्वोर्ध्वां नीत्वा योनिं कृत्वाद्यं त्रिकोणं चक्रं भवति। द्वितीयमन्तरालं भवति। तृतीयमष्टयोन्यङ्कितं भवति। अथाष्टारचक्राद्यन्तविदि-क्कोणाग्रतो रेखां नीत्वा साध्याद्याकर्षणबद्धरेखां-नीत्वैत्येवमथोर्ध्वं संपुष्टयोन्यङ्कितं कृत्वा कक्षाभ्य ऊर्ध्वगरेखाचतुष्टयं कृत्वा यथा-क्रमेण मानयष्टिद्वयेन दशयोन्यङ्कितं चक्रं भवति। अनेनैव प्रका-रेण पुनर्दशारचक्रं भवति। मध्यात्रिकोणाग्रचष्टयाद्रेखाचराग्रकोणेषु

संयोज्य तद्दशारांशतो नीतां मानयष्टिरेखां योजयित्वा चतुर्दशारं चक्रं भवति। ततोऽष्टपत्रसंवृतं चक्रं भवति। षोडशपत्रसंवृतं चक्रं चतुर्द्वारं भवति। ततः पार्थिवं चक्रं चतुर्द्वारं भवति। एवं सृष्टियोगेन चक्रं व्याख्यातम् ॥त्रिपुरतापिन्युपनिषद् ॥२॥

। इति श्रीचक्रम् ।

## अथागमोक्तमहालक्ष्मीपूजाविधिः ।

श्रीकामः "ओं श्रीं महालक्ष्म्यै नमः" इति त्रिराचम्य "श्रीमन्नारायणचरणौ शरणं प्रपद्ये श्रीमते नारायणाय नमः" इति प्राणानायम्य, चतुरङ्गुलोच्छ्रिनायां हस्तमात्रपरिमितायां चतुरस्रायां भूमौ शुक्लाम्बराच्छदनं कृत्वा तदुपरि तण्डुलपुञ्जे कुंकुमेन श्रीचक्रं विधाय तन्मध्ये फलमयीं महालक्ष्मीं संस्थाप्य करे साक्षतपुष्पफलजलद्रव्याणि गृहीत्वा सङ्कल्पं कुर्यात् "ओं तत्सदद्य श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य ब्रह्मणो द्वितीयपरार्धे श्रीश्वेतवाराहकल्पे सप्तमे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे जम्बूद्वीपे भरतखण्डे आर्यावर्तैकदेशान्तर्गते कारूषदेशे गङ्गादक्षिणतटे सिद्धाश्रमे चंत्ररथवने वेदगर्भापुर्यां बौद्धावतारे रामानुजसम्वत्सरे अमुकसंख्यके विक्रमसम्वत्सरे अमुकसंख्यके शालिवाहन शाके अमुकसंख्यके अमुकनाम्नि संवत्सरे उत्तरायणे शिशिरऋतौ माघमासे शुक्लपक्षे पूर्णिमातिथौ गुरुवासरे पुष्यनक्षत्रे काश्यपगोत्रोत्पन्नः नारायणरामानुजश्रीवैष्णवदासनामाहं मम कायिक-वाचिक-मानसिक-

ज्ञाताज्ञात सकलदोषपरिहारार्थं श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं स्थिरलक्ष्मीसुखशांतिधनधान्यपुत्रपौत्रादिप्राप्त्यर्थं श्रीमहालक्ष्मी-प्रीत्यर्थं सर्वारिष्टनिवृत्तिपूर्वकसर्वाभीष्टप्राप्त्यर्थं आयुरारोग्यै-श्वर्याभिवृद्ध्यर्थं च महालक्ष्मीपूजनं करिष्ये" ।

अथ ध्यानम् ।

या सा पद्मासनस्था विपुलकटितटी पद्मपत्रायताक्षी
गम्भीरावर्तनाभिस्तनभरनमिता शुभ्रवस्त्रोत्तरीया ।
या लक्ष्मीर्दिव्यरूपैर्मणिगणखचितैः स्नापिता हेमकुम्भैः
सा नित्यं पद्महस्ता मम वसतु गृहे सर्वमाङ्गल्ययुक्ता ॥१॥

ॐ सर्वलोकस्य जननीं पद्महस्तां सुलोचनाम् ।
सर्वदेवमयीमीशां देवीमावाहयाम्यहम् ॥२॥

ओं महालक्ष्म्यैनमः आवाहनं समर्पयामि ॥२॥

ॐ अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च
अस्यै देवत्वमर्चायै मामहेति च कश्चन ॥३॥

ओं महालक्ष्म्यैनमः प्राणं प्रतिष्ठापयामि ॥३॥

ॐ तप्तकाञ्चनवर्णाभम् मुक्तामणिविराजितम् ।
अमलं कमलं दिव्यमासनं प्रतिगृह्यताम् ॥४॥

ओं महालक्ष्म्यै नमः आसनं समर्पयामि ॥४॥

ॐ अष्टगन्धसमायुक्तं स्वर्णपात्रप्रपूरितम् ।

अर्घ्यं गृहाण मद्दत्तं महालक्ष्म्यै नमोऽस्तुते ॥५॥

ओम् महालक्ष्म्यै नमः अर्घ्यं समर्पयामि ॥५॥

ॐ गङ्गादितीर्थसम्भूतं गन्धपुष्पादिभिर्युतम् ।
पाद्यं ददाम्यहं देवि गृहाणाशु नमोऽस्तुते ॥६॥

ओम् महालक्ष्म्यै नमः पाद्यं समर्पयामि ॥६॥

ॐ सर्वलोकस्य या शक्तिर्ब्रह्मविष्ण्वादिभिः स्तुता ।
ददाम्याचमनं तस्यै महालक्ष्म्यै मनोहरम् ॥७॥

ओम् महालक्ष्म्यै नमः आचमनं समर्पयामि ॥७॥

ॐमन्दाकिन्याः समानीतैर्हेमाम्भोरुहवासितैः ।
स्नानं कुरुष्व देवेशि सलिलैश्च सुगन्धिभिः ॥८॥

ओम् महालक्ष्म्यै नमः स्नानं समर्पयामि ॥८॥

ॐ कामधेनुसमुत्पन्नं सर्वेषां जीवनं परम् ।
पावनं यज्ञहेतुश्च पयः स्नानार्थमर्पितम् ॥९॥

ओम् महालक्ष्म्यै नमः दुग्धस्नानं समर्पयामि ॥९॥

पयसस्तु समुद्भूतं मधुराम्लं शशिप्रभम् ।
दध्यानीतं मया देवि स्नानार्थं प्रतिगृह्यताम् ॥१०॥

ओम् महालक्ष्म्यै नमः दधिस्नानं समर्पयामि ॥१०॥

ॐ नवनीतसमुत्पन्नं सर्वसन्तोषकारकम् ।
घृतं तुभ्यं प्रदास्यामि स्नानार्थं प्रतिगृह्यताम ॥११॥

ओं महालक्ष्म्यै नमः घृतस्नानं समर्पयामि ॥११॥

ॐ तरुपुष्पसमुद्भूतं सुस्वादु मधुरं मधु ।
तेजः पुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम् ॥१२॥

ओं महालक्ष्म्यै नमः मधुस्नानं समर्पयामि ॥१२॥

ॐ इक्षसारसमुद्भूता शर्करा पुष्टिकारिका ।
मलापहारिका दिव्या स्नानार्थं प्रतिगृह्यताम् ॥१३॥

ओं महालक्ष्म्यै नमः शर्करास्नानं समर्पयामि ॥१३॥

ॐ पञ्चामृतसमायुक्तं जाह्नवीसलिलं शुभम् ।
गृहाण विश्वजननि स्नानार्थं भक्तवत्सले ॥१४॥

ओं महालक्ष्म्यै नमः पञ्चामृतस्नानं समर्पयामि ॥१४॥

ॐ तोयं तव महादेवि कर्पूरागरुवासितम् ।
तीर्थेभ्यः सुसमानीतं स्नानार्थं प्रतिगृह्यताम् ॥१५॥

ओं महालक्ष्म्यै नमः शुद्धोदकस्नानं समर्पयामि ॥१५॥

ॐ दिव्याम्बरं नूतनं हि क्षौमं त्वतिमनोहरम् ।
दीयमानं मया देवि गृहाण जगदम्बिके ॥१६॥

ओं महालक्ष्म्यै नमः वस्त्रं समर्पयामि ॥१६॥

ॐ कञ्चुकीमुपवस्त्रं च नानारत्नैः समन्वितम् ।
गृहाण त्वं मया दत्तं मङ्गले जगदीश्वरि ॥१७॥

ओं महालक्ष्म्यै नमः उपवस्त्रं समर्पयामि ॥१७॥

ओम् कापिलं दधिकुन्देन्दुधवलं मधुसंयुतम् ।
स्वर्णपात्रस्थितं देवि मधुपर्कं गृहाण भोः ॥१८॥

ओं महालक्ष्म्यै नमः मधुपर्कं समर्पयामि ॥१८॥

ओम् स्वभावसुन्दराङ्गायै नानादेवाश्रये शुभे ।
भूषणानि विचित्राणि कल्पयाम्यमरार्चिते ॥१९॥

ओं महालक्ष्म्यै नमः आभूषणानि समर्पयामि ॥१९॥

ओम् श्रीखण्डागरुकर्पूरमृगनाभिसमन्वितम् ।
विलेपनं गृहाणाशु नमोऽस्तु भक्तवत्सले ॥२०॥

ओं महालक्ष्म्यै नमः गन्धविलेपनं समर्पयामि ॥२०॥

ओम् केशरागरुकर्पूरचन्दनादिसमन्वितम् ।
विलेपनं महादेवि तुभ्यं दास्यामि भक्तितः ॥२१॥

ओं महालक्ष्म्यै नमः चन्दनं समर्पयामि ॥२१॥

ओम् सिन्दूरं रक्तवर्णं च सिन्दूरतिलकप्रिये ।
भक्त्या दत्तं मया देवि सिन्दूरं प्रतिगृह्यताम् ॥२२॥

ओं महालक्ष्म्यै नमः सिन्दूरं समर्पयामि ॥२२॥

ओम् कुङ्कुमं कामदं दिव्यं कुङ्कुमं कामरूपिणम् ।
अखण्डकामसौभाग्यं कुङ्कुमं प्रतिगृह्यताम् ॥२३॥

ओं महालक्ष्म्यै नमः कुङ्कुमं समर्पयामि ॥२३॥

ओम् अबोरं च गुलालं च चोवा चन्दनमेव च ।

अबीरेणार्चिता देवि अतः शान्ति प्रयच्छ मे ॥२४॥

ॐ महालक्ष्म्यै नमः अबीरगुलालं समर्पयामि ॥२४॥

ओम् चक्षुर्भ्यां कज्जलं रम्यं सुभगे शान्तिकारिके ।
कर्पूरज्योतिरुत्पन्नं गृहाण परमेश्वरि ॥२५॥

ॐ महालक्ष्म्यै नमः कज्जलं समर्पयामि ॥२५॥

ओम् सौभाग्यसूत्रं वरदे सुवर्णमणिसंयुते ।
कण्ठे बध्नामि देवेशि सौभाग्यं देहि मे सदा ॥२६॥

ॐ महालक्ष्म्यै नमः मङ्गलसूत्रं समर्पयामि ॥२६॥

ओम् अक्षतान्निर्मलाञ्शुद्धान्मुक्तामणिसमन्वितान् ।
गृहाणमान्महादेवि देहि मे निर्मलां धियम् ॥२७॥

ॐ महालक्ष्म्यै नमः अक्षतं समर्पयामि ॥२७॥

ओम् मन्दारपारिजाताद्याः पाटली केतकी तथा ।
मरुवा मोगरं चैव गृहाणाशु नमो नमः ॥२८॥

ॐ महालक्ष्म्यै नमः पुष्पं समर्पयामि ॥२८॥

ओम् पद्मशंखजपापुष्पैः शतपत्रैर्विचित्रिताम् ।
पुष्पमालां प्रयच्छामि गृहाण त्वं सुरेश्वरि ॥२९॥

ॐ महालक्ष्म्यै नमः पुष्पमालां समर्पयामि ॥२९

ओम् तुलसीं हेमरूपां च रत्नरूपां च मञ्जरीम् ।
भवमोक्षप्रदां तुभ्यमर्पयामि हरिप्रिये ॥३०॥

ओं नैवेद्यं गृह्यतां देवि भक्ष्यभोज्यसमन्वितम् ।
षड्रसैरन्वितं दिव्यं लक्ष्मि देवि नमोऽस्तुते ॥३७॥

ॐ महालक्ष्म्यै नमः नैवेद्यं निवेदयामि ॥३७॥

ओं एलोशीरलवङ्गादिकर्पूरपरिवासितम् ।
प्राशनार्थं कृतं तोयं गृहाण परमेश्वरि ॥३८॥

ॐ महालक्ष्म्यै नमः मध्ये पानीयं समर्पयामि ॥३८

ओं फलेन फलितं सर्वं त्रैलोक्यं सचराचरम् ।
तस्मात्फलप्रदानेन पूर्णाः सन्तु मनोरथाः ॥३९॥

ॐ महालक्ष्म्यै नमः ऋतुफलं समर्पयामि ॥३९॥

ओं शीतलं निर्मलं तोयं कर्पूरेण सुवासितम् ।
आचम्यतामिदं देवि प्रसीद त्वं महेश्वरि ॥४०॥

ॐ महालक्ष्म्यै नमः आचमनीयं समर्पयामि ॥४०

ओं इदं फलं मयानीतं सरसं च निवेदितम् ।
गृहाण परमेशानि प्रसीद प्रणमाम्यहम् ॥४१॥

ॐ महालक्ष्म्यै नमः अखण्डऋतुफलं समर्पयामि ॥४१॥

ओं एलालवङ्गकर्पूरनागपत्रादिभिर्युतम् ।
पूगीफलेन संयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥४२॥

ॐ महालक्ष्म्यै नमः ताम्बूलपूगीफलं समर्पयामि ॥४२॥

ओं पूजाफलसमृद्ध्यर्थं तवाग्रे स्वर्णमीश्वरि ।

ओम् महालक्ष्म्यै नमः तुलसीपत्रं समर्पयामि ॥ ३०॥

**ओम् अमृतोद्भवः श्रीवृक्षो महादेवि प्रियः सदा ।**

**बिल्वपत्रं प्रयच्छामि पवित्रं ते सुरेश्वरि ॥३१॥**

ओम् महालक्ष्म्यै नमः बिल्वपत्रं समर्पयामि ॥३१॥

**ओम् शमी शमयते पापं शमी शत्रुविनाशिनी ।**

**धारिण्यर्जुनबाणानां रामस्य प्रियवादिनी ॥३२॥**

ओम् महालक्ष्म्यै नमः शमीपत्रं समर्पयामि ॥३२॥

**ओम् विष्ण्वादिसर्वदेवानां प्रियां सर्वसुशोभनाम् ।**

**क्षीरसागरसम्भूतां दूर्वां स्वीकुरु सर्वदा ॥३३॥**

ओम् महालक्ष्म्यै नमः दूर्वां समर्पयामि ॥३३॥

**ओम् स्नेहं गृहाणास्नेहेन लोकेश्वरि दयानिधे**

**सर्वलोकस्य जननि ददामि स्नेहमुत्तमम् ॥३४॥**

ओम् महालक्ष्म्यै नमः सुगन्धतेल समपयामि ॥३४॥

**ओम् वनस्पतिरसोत्पन्नो गन्धाढ्यः सुमनोहरः ।**

**आघ्रेयः सर्वभूतानां धूपोऽयं प्रतिगृह्यताम् ॥३५**

ओम् महालक्ष्म्यै नमः धूपमाघ्रापयामि ॥३५॥

**ओम् कार्पासवर्तिसंयुक्तं घृतयुक्तं मनोहरम् ।**

**तमोनाशकरंदीपं गृहाण परमेश्वरि ॥३६॥**

ओम् महालक्ष्म्यै नमः दीपं दर्शयामि ॥हस्तप्रक्षालनं करौमि॥

स्थापितं तेन मे प्रीता पूर्णान् कुरु मनोरथान् ।४३।।

ॐ महालक्ष्म्यै नम. दक्षिणां समर्पयामि ।।४३।।

ओं चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च ।

त्वमेव सर्वज्योतींषि आर्तिक्यं प्रतिगृह्यताम् ।।४४।।

ॐ महालक्ष्म्यै नमः आर्तिक्यं समर्पयामि ।।४४।।

ओं नानासुगन्धिपुष्पाणि यथाकालोद्भवानि च ।

पुष्पाञ्जलिर्मया दत्तो गृहाण परमेश्वरि ।।४५।।

ॐ महालक्ष्म्यै नमःपुष्पाञ्जलिं समर्पयामि ।।४५।।

ओं यानि कानि च पापानि जन्मान्तरकृतानि च ।

तानि तानि प्रणश्यन्तु प्रदक्षिण पदे पदे ।।४६।।

ॐ महालक्ष्म्यै नमः प्रदक्षिणां समर्पयामि ।।४६।।

"अथ प्रार्थना"

ओं सुससुरेन्द्रादिकिरीटमौक्तिकैयु क्त सदायत्तव पादपङ्कजम् ।
परावरं पातु वरं सुमङ्गलं नमामि भक्त्या तव कामसिद्धये
।४७।

भवानि त्वं महालक्ष्मीः सर्वकामप्रदायिनि ।

सुपूजिता प्रसन्ना स्यान्महालक्ष्म्यै नमोऽस्तुते ।।४८।।

नमस्ते सर्वदेवानां वरदासि हरिप्रिये ।

या गतिस्त्वत्प्रपन्नानां सा मे भूयात्त्वदर्चनात् ।।४९।।

यदक्षरपदभ्रष्टं मात्राहीनञ्च यद्भवेत्

तत्सर्वं क्षम्यतां देवि प्रसीद परमेश्वरि ॥५०॥

ॐ महालक्ष्म्यै नमः प्रार्थनां समर्पयामि ॥५०॥

ओं नमः सर्वहितार्थायै जगदाधारहेतवे ।

साष्टाङ्गोयं प्रणामस्तु प्रयत्नेन मया कृतः ॥५१॥

ॐ महालक्ष्म्यै नमः साष्टाङ्गप्रणामं समर्पयामि ॥५१॥

ओं इमां पूजां मया देवि यथाशक्त्योपपादिताम् ।

रक्षार्थं त्वं समादाय व्रज स्थामनुत्तमम् ॥५२॥

ॐ महालक्ष्म्यै नमः विसर्जनं समर्पयामि ॥५२॥

अनया पूजया महालक्ष्मीः प्रीयतां न मम । इति पूजा ॥

## अथ तन्त्रोक्तमुद्राविधिः ।

(१) कूर्ममुद्रया श्रियं ध्यायेत् (२) कोलमुद्रया श्रियमावाहयेत् (३) योनिमुद्रया श्रियं प्रतिष्ठापयेत् (४) पद्ममुद्रया आसनं दद्यात् (५) शङ्खमुद्रया अर्घ्यं दद्यात् (६) मत्स्यमुद्रया पाद्यं दद्यात् (७) व्यापकाञ्जलिमुद्रया आचमनीयं दद्यात् (८) उन्मुखोन्मुखमुद्रया श्रियं स्नापयेत् (९) लिंगमुद्रया वस्त्रं दद्यात् (१०) महाक्रान्तामुद्रया गन्धं दद्यात् (११) पल्लवमुद्रया पुष्पं दद्यात् (१२) वैराग्यमुद्रया धूपमाघ्रापयेत् (१३) ज्ञानमुद्रया दीपं दर्शयेत् (१४) सुरभिमुद्रया नैवेद्यं निवेदयेत् (१५) ग्रन्थितमुद्रया पुष्पाञ्जलिं कुर्यात् (१६) निर्वाणमुद्रया श्रियं विसर्जयेदिति।

## – अथ मुद्रानिर्माणप्रकारः –

### कूर्ममुद्रा ।

वामहस्ते च तर्जन्यां दक्षिणस्य कनिष्ठिका ।
तथा दक्षिणतर्जन्यां वामाङ्गुष्ठं नियोजयेत् ।
उन्नतं दक्षिणाङ्गुष्ठं वामस्य मध्यमादिकाः ।
अङ्गुलीर्योजयेत्पृष्ठे दक्षिणस्य करस्य च ॥
वामस्य पितृतीर्थेन मध्यमानामिके तथा ।
अधोमुखे च ते कुर्याद्दक्षिणस्य करस्य च ॥
कूर्मपृष्ठसमं कुर्याद्दक्षपाणिं च सर्वतः ।
कूर्ममुद्रेयमाख्याता देवताध्यानकर्मणि ॥१॥

### –कोलमुद्रा–

तर्जनीं दक्षहस्तस्य वामाङ्गुष्ठे निवेश्य च ।
हस्तेन हस्तं बध्नीयात्कोलमुद्रा समीरिता ॥२॥

### –योनिमुद्रा–

मिथः कनिष्ठिके बद्ध्वा तर्जनीभ्यामनामिके ।
अनामिकोर्ध्वे संश्लिष्टे दीर्घमध्यमनोरथ ॥
अङ्गुष्ठाग्रद्वये न्यस्य योनिमुद्रेयमीरिता ॥३॥

